ऋकाराण्णत्व'मिति यदयं क्षुभ्नादिषु नृनमनशब्दं पठति ॥ नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात्—नानमनिरिति ॥ यत्तर्हि तत्रैव 'तृप्नोति'शब्दं पठति ॥ यच्चाऽपि नृनमनशब्दं पठति ॥ ननु चोक्तं 'वृद्ध्यर्थमेतत्स्या'दिति । बहिरङ्गा वृद्धिरन्तरङ्गं णत्वम् । 'असिद्धं बहिरङ्गमन्तरङ्गे' । अथ वोपरिष्टाद्योगविभागः करिष्यते । [इदमस्ति 'छन्दस्यृदवग्रहा'दिति । 'ऋतः' ।] ऋतो [उत्तरस्य] नो णो भवति । ततः 'छन्दस्यृवग्रहात्' । 'ऋत' इत्येव ॥

## अट्कुप्वाङ्नुम्व्यवायेऽपि ।८।४।२।

॥ * ॥ अड्व्यवाये णत्वेऽन्यव्यवाये प्रतिषेधः ॥ * ॥ अड्व्यवाये णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यः । आदर्शेन । अक्षदर्शेन ॥*॥ न वाऽन्येन व्यपेतत्वात् ॥*॥ न वा वक्तव्यः ॥ किं कारणम् ? ॥ 'अन्येन व्यपेतत्वात्' । अन्येनाऽत्र व्यवायः ॥ यद्यप्यत्रान्ये व्यवायोऽटाऽपि तु व्यवायो-

---

प्र.] सर्वे ते आक्षरसमाम्नायिकाः । अत्र च 'बह्वचोऽन्तोदात्ताट्ठ'ञिति भवार्थे ठञ्, 'प्रयोजन'मित्यनेन वा । यदयमिति । इदं ज्ञापकमृकारादपि नो णो भवतीत्यनुमापयति । अथ वा वर्णैकदेशोऽपीह रेफो गृह्यते, रेफाकृतिर्वा निर्दिश्यते, भक्तिव्यवधानेऽपि वा णत्वं भवतीत्यनुमीयते । [ **रषाभ्यां नो णः** ] ॥

**अट्कुप्वा । अड्व्यवाये इति ।** एतत्सूत्रारम्भाद्रषाभ्यामित्यत्राऽडादिव्यवायविषये 'तस्मादित्युत्तरस्ये'ति परिभाषा निर्दिष्टाङ्गविकलोपतिष्ठत इति यत्राऽड्डादिव्यवायोऽन्यव्यवायश्च तत्र णत्वप्रसङ्गः । **न वेति ।** 'रषाभ्या'मित्यत्र 'तस्मा'दिति परिभाषोपस्थानाद्व्यवाये णत्वाऽप्रसङ्गादेतत्सूत्रमारभ्यमाणमडादि-

---

उ.] मात्रा । अत्र - मानं प्रत्याहाराह्निके उक्तम् । एवञ्च परभागो मात्रातुर्य इति स्पष्टमेव । एवञ्च 'नाव्यपवृक्तस्ये'ति न्यायादङ्ग्रहणेन ग्रहणाऽभाव इति भावः । **प्रयोजनमित्यनेन वेति ।** प्रयोजनशब्दश्च प्रकृते प्रयोजकपरः । शेषं भाष्यं प्रत्याहाराह्निके व्याख्यातम् । तत्र **बहिरङ्गा वृद्धि**रित्येतद्वार्तिकमतेन । भाष्यकृता 'खरवसानयो'रिति सूत्रे कार्यकालपक्षेऽपि त्रैपादिकेऽन्तरङ्गे तदप्रवृत्तेः सिद्धन्तितत्वात् । [ **रषाभ्यां नो णः** ] ।

**अट्कुप्वा ।** ननु व्यवाये 'तस्मादित्युत्तरस्ये'ति परिभाषोपस्थित्या णत्वाऽप्राप्तेः किं प्रतिषेधेनेत्यत आह—**एतत्सूत्रेति । अडादिव्यवाये इति ।** तद्व्यवाये विधानसामर्थ्यात्तावन्मात्रकृतानन्तर्याऽभावेऽपि णत्वं भवति । अन्यव्यवाये तु निर्दिष्टग्रहणेन तद्व्या-

ऽस्ति। तत्रास्त्यड्व्यवाय[1] इति प्राप्नोति॥ अटैव व्यवाये भवति॥ किं वक्तव्य-मेतत्?॥न हि॥ कथमुच्यमानं गंस्यते?॥अड्ग्रहणसामर्थ्यात्। यदिहि यत्राऽटा चाऽन्येन च व्यवायस्तत्र स्यादड्ग्रहणमनर्थकं स्यात्। 'व्यवाये नो णो भवती'त्येव ब्रूयात्॥ अस्त्यन्यदड्ग्रहणस्य प्रयोजनम्॥ किम्?॥ योऽनिर्दिष्टैरेव व्यवाय-स्तत्र मा भूत्–कृत्स्नं मृत्स्नेति॥ यद्येतावत्प्रयोजनं स्याच्छर्व्यवाये[1] नेत्येव ब्रूयात्॥*॥ तत्समुदाये णत्वाऽप्रसिद्धिर्यथान्यत्र॥*॥ तत्समुदाये–व्यवाय-समुदाये–णत्वस्याऽप्रसिद्धिः–अर्केण अर्घेण। ['यथान्यत्र'[2]]। यथाऽन्यत्रापि व्यवायसमुदाये कार्यं न भवति॥ क्वाऽन्यत्र?॥ 'नुम्विसर्जनीयशर्व्यवा-येऽपि'। निंस्से निंस्स्वेति॥ किं पुनः कारणमन्यत्रापि व्यवायसमुदाये कार्यं न भवति?॥ 'प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टे'ति। तद्यथा–वृद्धिगुणसंज्ञे प्रत्येकं भवतः॥ ननु चायमप्यस्ति दृष्टान्तः–'समुदाये वाक्यपरिसमाप्ति'-रिति। तद्यथा 'गर्गाः शतं दण्ड्यन्ता'मिति, अर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति॥ यद्येवमेकेन व्यवाये न प्राप्नोति–किरिणा गिरिणेति॥ उभयथापि वाक्यपरिसमाप्तिर्दृश्यते, तद्यथा–'गर्गैः सह न भोक्तव्य'मिति, प्रत्येकं च न भुज्यते समुदितैश्च॥*॥ कुव्यवाये हादेशेषु

प्र.] व्यवाये णत्वमनुजानाति नाऽन्यव्यवाये, तस्य निर्दिष्टग्रहणेन निवर्तितत्वादिति-भावः। अड्ग्रहणसामर्थ्यादिति। सामर्थ्येनाऽप्यनन्तरोक्तमर्थं प्रतिपादयति। अड्व्यवायमन्तरेणान्येन केवलेन व्यवायाऽसम्भवाद्यवाय इत्येवाऽड्व्यवा-यस्याक्षिप्तत्वादड्ग्रहणमटैव व्यवाय इत्यवधारणार्थं विज्ञायत इत्यर्थः। अनिर्दि-ष्टैरिति। अडादिव्यतिरिक्तैः। शर्व्यवाये नेति। अस्मादेव च निषेधादन्यव्य-वाये णत्वमुपास्यते। यद्येवमेकेनेति। द्वाभ्यामपि व्यवाये न प्राप्नोति-अर्केणेति। उभयथेति। व्यवायोपलक्षणायाऽडादीनामुपादानादेकेन द्वाभ्यां बहुभिश्चयथा-

उ.]वृत्तेर्न प्रवर्तते इति भावः। न च व्यवायपदश्रुत्या विरोधान्निर्दिष्टांऽशाऽप्रवृत्तिः। निर्दिष्ट-पदस्य तदतिरिक्ताऽक्षरसमाम्नायिककृताऽव्यवायपरत्वात्। तदाह–सामर्थ्येनापीति। अने-नास्यैकदेशयुक्तित्वं ध्वनयति। अन्यथा नञ्घटितेन गुर्वर्थेन न्यासेन कथमन्यथासिद्धिमस्य वदेत्। भाष्ये–शर्व्यवायेनेति। शर्ग्रहणं चुटुतुलानामप्युपलक्षणम्। अतएवाऽऽर्लीत्यादौ न दोषः। द्वाभ्यामपीति। समुदाये वाक्यपरिसमाप्तिरिति न्यायाश्रयणे सर्वैरेव व्यवाये णत्वं स्यान्नैकेन न द्वाभ्यामित्यर्थः। व्यवायोपलक्षणायेति। व्यवायकर्तृबोधनायेत्यर्थः। यथा

प्रतिषेधः ॥*॥ कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः ॥ किं प्रयोजनम् ? ॥ ॥ * ॥ प्रयोजनं वृत्रघ्नः स्रुघ्नः प्राघानीति ॥ * ॥ [ वृत्रघ्नः स्रुघ्नः प्राघानीति प्रयोजनम् ] ॥ हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्तव्यं भवति ।

॥ * ॥ नुम्व्यवाये णत्वेऽनुस्वाराऽभावे प्रतिषेधः ॥ * ॥

नुम्व्यवाये णत्वेऽनुस्वाराऽभावे प्रतिषेधो वक्तव्यः । प्रेन्वनम् प्रेन्वनीयम् ॥ * ॥ अनागमे च णत्वम् ॥ * ॥ अनागमे च णत्वं वक्तव्यम् । तृम्फणम् तृम्फणीयम् ॥ * ॥ अनुस्वारव्यवाये वचनात्तु सिद्धम् ॥ * ॥ अनुस्वारव्यवाये नो णो भवतीति वक्तव्यम् ॥ तदनुस्वारग्रहणं कर्तव्यम् ? न कर्तव्यम् । क्रियते न्यास एव । नकारेऽनुस्वारः परसवर्णीभूतो निर्दिश्यते ॥ इहापि तर्हि प्राप्नोति—प्रेन्वनं प्रेन्वनीयम् ॥ अनुस्वारविशेषणं नुम्ग्रहणं—'नुमो योऽनुस्वार'इति ॥ इहापि तर्हि न प्राप्नोति—तृम्फणं तृम्फणीयम् ॥

एवं तर्ह्ययोगवाहानामविशेषेणोपदेशश्चोदितस्तत्राऽनुस्वारे कृतेऽड्व्यवाये इत्येव सिद्धम् ॥ यद्येवं नार्थो नुम्ग्रहणेन । अनुस्वारे कृतेऽड्व्यवाय इत्येव सिद्धम् ॥ [ अट्कुप्वाङ् ]

---

प्र].सम्भवं व्यवाये णत्वं भवति। वृत्रघ्न इति। 'प्रातिपदिकान्ते'ति णत्वप्रसङ्गः । स्रुघ्न इति । स्रुचो हन्यन्तेऽस्मिन्निति घञर्थे कविधानमिति कः। प्रेन्वनमिति । 'इजादेः सनुम' इति णत्वप्रसङ्गः । नकारेऽनुस्वार इति । द्विनकारको निर्देश इति भावः । नुमो योऽनुस्वार इति । सौत्रत्वान्निर्देशस्य षष्ठ्यन्तस्य परनिपातः ॥

---

उ.] 'वृषलैर्न प्रवेष्टव्य'मिति वृषलस्य प्रवेशनिषेधपरनोदनायां प्रत्येकं संहतानाञ्च प्रवेशो निषिध्यते एवमिहापीत्यर्थः । प्रातिपदिकान्तेति । 'कुमति च'त्यस्याप्युपलक्षणमिदम् । 'स्रुघ्न' इत्यत्र 'पूर्वपदात्संज्ञाया'मिति प्राप्तिः । अतएव ऋगयने निपातनमाश्रित्य 'अग' इति तत्र प्रत्याख्यातं भाष्ये । अत्पूर्वग्रहणं न कर्तव्यं भवतीति । तत्करणेऽपि 'बहुवृत्रहाणी' त्यसिद्धेः, उपसर्गसंबन्धसत्त्वेन 'वृत्रघ्न' इत्यसिद्धेश्च, 'प्रघनाघन' इत्यत्र णत्वापत्तेश्चेति भावः । वार्तिकस्य तत्र करणात्सर्वणत्वनिषेधकत्वमिति बोध्यम् । 'हादेशेष्वि'ति विशेषणात् 'द्रुघण' इत्यादौ 'पूर्वपदा'दितिणत्वं भवत्येव । तत्र हि द्रावुपपदे हन्तेरप् घनादेशश्च हन्तेरन्तोदात्तो विधीयते । द्विनकारक इति । तत्र पूर्वो नकारोऽनुस्वारस्य परसवर्णेन निर्दिष्ट इति व्याख्यास्यत इति भावः । [ अटकुप्वाङ्नुम् ] ।

## पूर्वपदात्संज्ञायामगः ।८।४।३।।

।।*।। पूर्वपदात्संज्ञायामुत्तरपदग्रहणम् ।। * ।। **पूर्वपदात्संज्ञायामुत्तरपदग्रहणं कर्तव्यम् ।। किं प्रयोजनम् ? ।।** *।। तद्धितपूर्वपदस्थाऽप्रतिषेधार्थम् ।।*।। **तद्धितस्थस्य पूर्वपदस्थस्य च प्रतिषेधो मा भूत् । खारपायणः, करणप्रियः ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यम् । पूर्वपदमुत्तरपदमिति संबन्धिशब्दावेतौ । सति पूर्वपदे उत्तरपदं भवति, सति चोत्तरपदे पूर्वपदं भवति । तत्र सम्बन्धादेतदवगन्तव्यं–'यत्प्रति पूर्वपदमित्येतद्भवति तत्स्थस्य नियम' इति ।। किं च प्रत्येतद्भवति ? ।। उत्तरपदं प्रति ।।** *।। संज्ञायां नियमवचनेऽगप्रतिषेधान्नियमप्रतिषेधः ।।*।। **संज्ञायां नियमवचनेऽगप्रतिषेधान्नियमस्याऽयं प्रतिषेधो विज्ञायते–'अग' इति ।। तत्र को दोषः ? ।।** * ।। तत्र नित्यं णत्वप्रसङ्गः ।। * ।। **तत्र पूर्वेण संज्ञायां चाऽसंज्ञायां च नित्यं णत्वं प्राप्नोति ।।** ।।*।। योगविभागात्सिद्धम्[१] ।।*।। **योगविभागः करिष्यते–'पूर्वपदात्संज्ञायाम्'। ततः 'अगः' । गान्तात्पूर्वपदाद्या च यावती च[२] णत्वप्राप्तिस्तस्याः सर्वस्याः**

---

**प्र.]पूर्वपदा। तद्धितेति।** 'पूर्वपदे यौ रषौ ताभ्यां परस्य नकारस्य संज्ञायामेव णत्व'मिति नियमादसंज्ञायां तद्धितपूर्वपदस्थस्यापि णत्वं न प्राप्नोतीत्युत्तरपदग्रहणं कर्तव्यम् । **खारपायण इति ।** खरपस्यापत्यं गोत्रं । नडादित्वात् फक् ।

**सम्बन्धिशब्दाविति ।** पूर्वपदावयवो रेफः षकारश्च पूर्वपदशब्देनोच्यते । समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते । पूर्वपदत्वं चोत्तरपदापेक्षमिति तद्धितपूर्वपदस्थस्य णत्वं भवत्येव । **समान[पदे[२]]मेवेति ।** समासे च पूर्वपदोत्तरपदविभागाऽपेक्षया भिन्नपदत्वमप्यस्तीति णत्वाऽप्रसङ्गः । एवं च विध्यर्थमेतत्सूत्रं, न नियमार्थम् । अथ खारपायण इत्यत्र कथं णत्वं, यावता खरशब्दस्यापि पदत्वमस्तीति, तत्स्थत्वाद्रेफस्य समानपदत्वमेव नास्ति । अत्राहुः– यत्र द्वावपि निमित्तनिमित्तिनौ समानपदस्थत्वं व्यभिचरतस्तत्र णत्वा-

---

**उ.] पूर्वपदात् । पूर्वपदे यावितिति ।** पूर्वपदग्रहणं तत्स्थे लाक्षणिकमिति भावः । **नियमादिति ।** समासे समानपदत्वात्पूर्वेण सिद्धेऽस्यारंभादित्यर्थः । **पूर्वपदावयव इति ।** आक्षेपोऽप्युत्तरपदावयवनस्येति भावः । पूर्वपदशब्दो रूढ इति तात्पर्यम् । भाष्ये– **नित्यं णत्वप्रसङ्ग इति ।** सर्वत्र संज्ञायामसंज्ञायां च णत्वप्रसङ्ग इत्यर्थः । **ऋगयनादिभ्य इति ।** ऋगयनव्यतिरिक्तानां तु गव्यवधाने णत्वप्राप्तियोग्यानामनभिधानमिति

प्रतिषेधः ॥*॥ अप्रतिषेधो वा यथा सर्वनामसंज्ञायाम् ॥*॥ न वाऽर्थः प्रतिषेधेन ॥ णत्वं कस्मान्न भवति ?॥ 'यथा सर्वनामसंज्ञायाम्' । उक्तं च सर्वनामसञ्ज्ञायां 'सर्वनामसंज्ञायां निपातनाण्णत्वाभाव'इति ॥ यथा पुनस्तत्र निपातनं क्रियते—सर्वादीनि सर्वनामानीति, इहेदानीं किं निपातनम् ? ॥ इहापि निपातनमस्ति ॥ किम् ?॥ 'अणृगयनादिभ्य' इति ॥ नैव वा पुनरत्र णत्वं प्राप्नोति ॥ किं कारणम् ? ॥ 'समानपद' इत्युच्यते, न चैतत्समानपदम् ॥ समासे कृते समानपदम् ॥ समानपदमेव यन्नित्यं । न चैतन्नित्यं समानपदमेव ॥ किं वक्तव्यमेतत् ? ॥ न हि ॥ कथमनुच्यमानं गंस्यते ? ॥ 'समानग्रहणसामर्थ्यात्' । यदि हि यत्समानं चाऽसमानं च तत्र स्यात्समानग्रहणमनर्थकं स्यात् ॥ [ पूर्वपदात्संज्ञायामगः ] ॥

## विभाषौषधिवनस्पतिभ्यः ।८।४।६।

॥ * ॥ द्व्यक्षरत्र्यक्षरेभ्यः ॥ * ॥ द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम् । इह मा भूत्—देवदारुवनम् ॥ * ॥ इरिकादिभ्यः प्रतिषेधः ॥ * ॥ इरिकादिभ्यः प्रतिषेधो वक्तव्यः । इरिकावनम् । तिमिरवनम् ॥ [ विभाषौषधिवन ] ।

## अह्नोऽदन्तात् ।८।४।७।

॥*॥ अदन्तादन्तस्य ॥*॥ अदन्तादन्तस्येति वक्तव्यम् । इह मा भूत्—दीर्घाह्नी शरदिति ॥ तर्हि वक्तव्यम् ? ॥ न वक्तव्यं । नैषाऽहश्छब्दात्षष्ठी ॥ का तर्हि ? ॥ अह्नशब्दात्प्रथमा ।

---

प्र.]ऽभावः । इह तु रेफस्य व्यभिचारेऽपि नकारस्य समानपदस्थत्वाऽव्यभिचाराण्णत्वं प्रवर्तते । समानग्रहणमिति । 'पद'इत्येवाऽपदस्थयोर्निमित्तनिमित्तिनोरसम्भवात्सामर्थ्यादेकत्वसङ्ख्याया विवक्षया समानत्वे लब्धे समानश्रुतिरङ्गीकृताऽवधारणा विज्ञायत इत्यर्थः । [पूर्वपदात् ] ॥

---

उ.] भावः । यत्र द्वावपीति । एवं च निमित्तानधिकरणनिमित्तिमत्पदाऽघटितत्वमेव समानपदत्वमिति भावः । सामर्थ्यादेकत्वेति । अनुवादगतत्वेऽपि सामर्थ्यात्तद्विवक्षेति भावः । इदं चिन्त्यं, पदान्तरेऽप्रवृत्त्यापत्तेः । तस्मात्पदे इत्युक्त्यैव प्रत्यासत्त्या रषनानामेकपदस्थत्वे लब्धे तत्सामर्थ्यात्तल्लाभ इति बोध्यम् । [ पूर्वपदात्सञ्ज्ञायामगः ] ॥

विभाषौषधि । भाष्ये—द्व्यक्षरेति । अत्राऽक्षरशब्देनाऽच्सहितं व्यञ्जनम् । अत एवेरिकादिभ्यः प्रतिषेधः सार्थकः । [ विभाषौषधिवनस्पतिभ्यः ] ॥

'पूर्वसूत्रनिर्देशश्च' ॥ अथ वा युवादिषु पाठः करिष्यते ।। [अह्नोऽदन्तात्]॥

## वाहनमाहितात् ।८।४।८।

॥*॥ आहितोपस्थितयोः ॥*॥ आहितोपस्थितयोरिति वक्तव्यम्। इहापि यथा स्यात्–इक्षुवाहणम् शरवाहणम् ॥ अपर आह ॥*॥ वाहनं वाह्यादिति वक्तव्यम् ॥*॥ यदा हि गर्गाणां वाहनमपविद्धं तिष्ठति तदा मा भूत्–गर्गवाहनमिति ॥ [ वाहनमाहितात् ] ।

## वा भावकरणयोः ।८।४।१०।

॥*॥ वाप्रकरणे गिरिनद्यादीनामुपसङ्ख्यानम् ॥*॥ वाप्रकरणे गिरिनद्यादीनामुपसङ्ख्यानं कर्तव्यम्। गिरिणदी गिरिनदी। चक्रणितम्बा चक्रनितम्बा।

## प्रातिपदिकान्तनुम्विभक्तिषु च ।८।४।११।

॥*॥ प्रातिदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थम्॥*॥ प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणं कर्तव्यम् ॥ किं प्रयोजनम् ? ॥ 'असमासान्तप्रतिषेधार्थम्' । असमासान्तस्य मा भूत्–गर्गभगिनी

---

प्र.] अह्नोऽदन्तात् । पूर्वसूत्रनिर्देशश्चेति । पूर्वाचार्याः कार्यभाजः षष्ठ्या न निरदिक्षन्नित्यर्थः । अथवेति । अवश्यकर्तव्यश्च युवादिषु पाठः, 'प्रातिपदिकान्ते'ति विकल्पेन णत्वं मा भूत् । [ अह्नोऽदन्तात् ] ।

वाह । आहितोपस्थितयोरिति । आहितशब्देन भूतकालक्रियानिर्देशाद्यदा-वाह्यं नारोपितं केवलं सन्निहितं तदा न प्राप्नोतीति वचनम् । 'स्वस्वामिभाव-निवृत्तिपरत्वाद्भूतकालस्येहाविवक्षे'त्यन्ये आहुः । वाहनं वाह्यादिति । वहनीयवाचिन इत्यर्थः । अपविद्धमिति । वहनशक्तिविकलं प्रनष्टमित्यर्थः । यदा गर्गा वाह्यत्वेन विवक्ष्यन्ते न तु स्वामित्वेन तदा णत्वं भवत्येव। [वहिनमाहितात्]

प्रातिपदिका। समासान्तग्रहणमिति । समासस्य प्रातिपदिकस्य योऽन्त्यो

---

उ.] अह्नोऽदन्तात् । अवश्येति । एवं चाऽदन्तानुकरणक्लेशो वृथैवेति भावः ।

वाहनमा । आहितम्–आरोपितं । वाह्यम्–उपस्थितम् । अनारोपितवाह्यमपि सन्निहितवाह्यं । वचनमिति । उपस्थितेत्येतदित्यर्थः । सूत्राक्षरैरेवाऽस्याऽर्थस्य सिद्धिं दर्शयति–स्वस्वामीति । वहनीयेति । वहनीयाऽर्थवाचकात्परस्य वाहनस्य णत्वमित्यर्थः । तत्किं गार्ग्यवाहणमित्यसाध्वेव, नेत्याह–यदेति । [ वाहनमाहितात् ] ॥

प्रातिपदिकान्त । ननु कृतेऽपि समासान्तग्रहणे समासप्रातिपदिकावयवत्वात्-

दक्षभगिनीति ॥ न वा भवति–गर्गभगिणीति ? ॥ भवति यदैतद्वाक्यं गर्गाणां भगो गर्गभगः, गर्गभगोऽस्याऽस्तीति । यदा त्वेतद्वाक्यं भवति– गर्गाणां भगिनी गर्गभगिनीति, तदा न भवितव्यं, तदा मा भूदिति[1] ॥ यदि समासान्तग्रहणं क्रियते माषवापिणी व्रीहिवापिणीत्यत्र[1] न प्राप्नोति ॥ ॥ * ॥ लिङ्गविशिष्टग्रहणे चोक्तम् ॥ * ॥ [ लिङ्गविशिष्टग्रहणे चोक्तम्[2] ] ॥ किमुक्तम् ? ॥ 'गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्ते'रिति ॥ * ॥ तत्र युवादिप्रतिषेधः ॥ * ॥ तत्र युवादीनां प्रतिषेधो वक्तव्यः । आर्ययूना क्षत्रिययूना । प्रपक्वानि परिपक्वानि । दीर्घाह्नी शरदिति ॥

## कुमति च ।८।४।१३ ।

अथेह कथं भवितव्यं–माषकुम्भवापेण व्रीहिकुम्भवापेणेति, नित्यं णत्वेन भवितव्यमाहोस्विद्विभाषया[3] ? ॥ यदा तावदेतद्वाक्यं भवति– कुम्भस्य वापः कुम्भवापः, माषाणां कुम्भवापो माषकुम्भवाप इति,–तदा

---

प्र,]नकारस्तस्य णत्वमित्यर्थः । गर्गभगिनीति । 'भगि'न्नित्येतस्य प्रातिपदिकस्याऽन्तो नकार इति णत्वप्रसङ्गः । अन्तशब्दश्चाऽवसानवत्त्यैकदेशवाची । यथा वस्त्रान्त इति । गर्गभगोऽस्यास्तीति । खारपायणवत्समानपदस्थत्वाद्रेफनकारयोः पूर्वेणैवाऽत्र णत्वं न त्वनेन । माषवापिणीति । ईकारान्तेन समास इति पूर्वपक्षः । नकारान्तेन समासः पश्चादीकार इति सिद्धान्तः । प्रपक्वानीति । अत्र 'कुमति चे'ति नित्यं णत्वं प्राप्नोति । [ प्रातिपदिकान्त ] ।

कुमति च । अथेति विचारो निष्प्रयोजन इत्याहुः । विग्रहद्वयेऽप्यर्थाभेदाद्रूपद्वयसिद्धौ च विकल्पस्यैव समर्थनान्नित्यणत्वोपन्यासस्य गजस्नानतुल्यत्वात् । न चाऽत्र णत्वेन भाव्यम् , 'पदव्यवाय' इति प्रतिषेधात् । केचित्त्वाहुः–यदा माषाणां कुम्भो माषकुम्भस्तस्य वाप इति प्रक्रिया तदोत्तरपदत्वे चाऽपदादिविधाविति प्रत्ययलक्षणनिषेधात्पदत्वाऽभावान्निषेधाऽप्रवृत्तिः ।

---

उ.] णत्वं स्यादेवेत्यत आह–अन्तशब्दश्चेति । न त्वेकदेशमात्रवाचीति भावः। नत्वनेनेति । समासप्रातिपादिकान्तत्वाऽभावान्नकारस्येति भावः । [ प्रातिपदिकान्तनुम् ] ।

कुमति च । निष्प्रयोजनत्वमुपपादयति—विग्रहद्वयेऽपीति । निषेधप्रतिषेधप्रतियोगिनः प्राप्तिमात्रनिरूपणपरं भाष्यमित्यन्ये । केचिदाहुरिति । अत्राऽरुचिबीजन्तु प्रत्यासत्त्योत्तरपदस्य कार्यित्व एव निषेधप्रवृत्त्याऽत्र तस्य दुर्लभत्वं । किं चाऽपदादिविधाविति

नित्यं णत्वेन भवितव्यम् । यदा त्वेतद्वाक्यं भवति,—माषाणां कुम्भो माषकुम्भः, माषकुम्भस्य वापो माषकुम्भवाप इति,—तदा विभाषया भवितव्यम् ॥

## उपसर्गादसमासेऽपि णोपदेशस्य ।८।४।१४।

असमासग्रहणं किमर्थम् ? ॥ समास इति वर्त्तते, असमासेऽपि यथा स्यात्-प्रणमति परिणमति ॥ क्व पुनः समासग्रहणं प्रकृतम् ? ॥ 'पूर्वपदात्संज्ञायामग' इति ॥ कथं पुनस्तेन समासग्रहणं शक्यं विज्ञातुम् ? ॥ पूर्वपदग्रहणसामर्थ्यात् । समास एवैतद्भवति पूर्वपदमुत्तरपदमिति ॥

अथाऽपिग्रहणं किमर्थम् ? ॥ समासेऽपि यथा स्यात्—प्रणामकः । परिणामकः ॥ यदि तर्हि समासे चाऽसमासे चेष्यते नार्थो'ऽसमासेऽपि'ग्रहणेन । निवृत्तं पूर्वपदादिति । अविशेषेणोपसर्गाण्णत्वं वक्ष्यामि ॥ समासे नियमान्न प्राप्नोति ॥ असिद्धमुपसर्गाण्णत्वं, तस्याऽसिद्धत्वान्नियमो न भविष्यति ॥

---

प्र.] कुम्भस्य वापः कुम्भवापो, माषाणां कुम्भवापो माषकुम्भवाप इत्यस्यां तु प्रक्रियायां णत्वप्रतिषेध [इति] । [कुमति च] ।

**उपसर्गा । समास एतद्भवतीति ।** ननु 'सुबामन्त्रित' इत्यत्रोक्तम्—'अविशेषेणैतद्भवति पूर्वपदमुत्तरपदमिति, तेन चर्मनमन्नित्यत्र णत्वं न भविष्यती'ति । उच्यते । स्वरग्रहणप्रत्याख्यानाय तदुक्तं न त्वेष पक्षः स्थितः । **समासे नियमादिति ।** यदा 'पूर्वपदात्संज्ञायामग' इति सूत्रं नियमार्थमिति पक्षस्तदैतदुच्यते । समासपदे हि समाने निमित्तनिमित्तिनोर्भावात्सिद्धं णत्वं नियम्यते । यदा तु समानग्रहणात्समानमेव यन्नित्यं पदं तदाश्रीयते तदा पूर्वपदादित्यस्य विध्यर्थत्वादसमासेपिग्रहणस्य ज्ञापकत्वाऽनुपपत्तिः । न्यायात्तु प्रकरणे प्रकरण-

---

उ.] पर्युदासेनाऽपदान्तविधावेव तत्प्रवृत्तेर्न लुमतेति सूत्रभाष्ये ध्वनितत्वम् । एवञ्चेदं भाष्यमेकदेश्युक्तिरिति तात्पर्यम । [ **कुमति च** ] ।

**उपसर्गाद । स्वरग्रहणप्रत्याख्यानायेति ।** तत्र हि चर्मनमन्, कूपे सिंचनित्यादौ णत्वषत्ववारणाय स्वरग्रहणमित्युक्ते, पूर्वपदादिति नियमाण्णत्वं न भविष्यति—इति चोदिते 'समासे एतद्भवतिपूर्वपद'मित्याद्युक्त्वा 'नेत्याह अविशेषणे' त्यादिना स्वरग्रहणं प्रत्याख्यात । तच्चाऽयुक्तमिति 'रूढिर्योगमपहरती' ति न्यायसिद्धैतद्भाष्याद्विज्ञायते, तदाह—**नत्वेष इति ।** **विध्यर्थत्वादिति ।** अयमेव युक्तः पक्षस्तत्र सिद्धान्तितश्चेति ज्ञापकत्वमसङ्गतम् । एवं चाऽसमासेऽपीति सूत्रं व्यर्थमेवेति भावः । ननु प्रत्येकं योगानामानर्थक्ये मानाभावात् स्वस्व

एवं तर्हि सिद्धे सति यदसमासेऽपिग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न योगो योगेऽसिद्धः ॥ किं तर्हि ? ॥ 'प्रकरणे प्रकरणमसिद्ध'मिति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ यत्तदुक्तं–निष्कृतं निष्पीतमित्यत्र सत्वस्याऽसिद्धत्वात् षत्वं न प्राप्नोती'ति, न स दोषो भवति ॥ * ॥ णोपदेशं प्रत्युपसर्गाभावादनिर्देशः ॥*॥ [ णोपदेशं प्रत्युपसर्गाभावादनिर्देशः ] । अगमको निर्देशोऽनिर्देशः । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो, न च णोपदेशं प्रति क्रियायोगः ॥ एवं तर्ह्याहाऽयमुपसर्गादसमासेऽपि णोपदेशस्येति, न च णोपदेशं प्रत्युपसर्गोऽस्ति, तत्र वचनाद्भविष्यति ॥ * ॥ वचनप्रामाण्यादिति चेत्पदलोपे प्रतिषेधः ॥ * ॥ [ वचनप्रामाण्यादिति चेत्पदलोपे प्रतिषेधो ] वक्तव्यः । प्रगता नायका अस्माद्ग्रामात्–प्रनायको ग्राम इति ॥ ॥*॥ सिद्धं तु यं प्रत्युपसर्गस्तत्स्थस्येति वचनात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ [ 'यं प्रत्युपसर्गस्तत्स्थस्येति वचनात्' ] । यं प्रत्युपसर्गस्तत्स्थस्य णो भवतीति वक्तव्यम् ॥ सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवाऽस्तु ॥ ननु चोक्तं 'णोपदेशं प्रत्युपसर्गाऽभावादनिर्देश'इति ॥ नैष दोषः । णोपदेश इति–नैवं विज्ञायते-ण उपदेशः णोपदेशः, णोपदेशस्येति ॥ कथं तर्हि ? ॥ ण उपदेशोऽस्य सोऽयं णोपदेशः, णोपदेशस्येति ॥

---

प्र.]स्यासिद्धत्वं व्यवस्थाप्यते,प्रकरणस्यार्थवद्वाक्यत्वात्तदन्तर्गतानां योगानामानर्थक्यायोगे योगस्याऽसिद्धत्वायोगात् । असिद्धत्वेन कार्याऽसम्पादनादनर्थकत्वमितिभावः । प्रकरणाऽसिद्धत्वेपि तस्यार्थवद्वाक्यत्वाद्बहूनामानर्थक्यम् । अथवा 'निष्कृत'मित्यादौ विसर्जनीयस्यैव षत्वं विधेयं न तु सकारस्य । **णोपदेशं प्रतीति** । उपदिश्यत इत्युपदेशो, णश्चासावुपदेशो णोपदेश इति कर्मधारयं मत्वा चोद्यते । **नैवं विज्ञायत इति** । उपसर्गग्रहणस्य मा भूद्गौणार्थत्वमिति मुख्यार्थग्रहणाय बहुव्रीहिराश्रीयते । [ **उपसर्गादसमासे** ] ।

---

उ.]साध्यप्रयोगसाधनेन सार्थक्याच्चेत्यत आह **अथवेति**। एवञ्चैतत्पक्षाश्रयणे न किंचित्फलमिति भावः । **कर्मधारयमिति** । अन्तरङ्गत्वादिति भावः । भाष्ये–**सिद्धन्तु यं प्रतीति** । यं प्रत्युपसर्गस्तत्स्थस्य णोपदेशस्य नस्य ण इत्यर्थ इति भावः । नन्वन्तरङ्गकर्मधारये संभवति कथं बहिरङ्गबहुव्रीह्याश्रयणमत आह–**उपसर्गेति** । तदा उपसर्गग्रहणं प्राद्युपलक्षणमित्याश्रयणीयं स्यादिति भावः । [ **उपसर्गादसमासेऽपि** ] ।

## हिनुमीना ।८।४।१५।

॥*॥ हिनुमीनाग्रहणे विकृतस्योपसङ्ख्यानम् ॥*॥ हिनुमीनाग्रहणे विकृतस्योपसङ्ख्यानं कर्त्तव्यम् । प्रहिणोति प्रमीणीते ॥ वचनाद्भविष्यति ॥ अस्ति वचने प्रयोजनम् ॥ किम् ? ॥ प्रहिणुतः प्रमीणाति ॥*॥ सिद्धमचः स्थानिवत्त्वात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ 'अचः स्थानिवत्त्वात्' । स्थानिवद्भावादत्र णत्वं भविष्यति ॥ प्रतिषिध्यतेऽत्र स्थानिवद्भावः 'पूर्वत्रासिद्धे न स्थानिव'दिति ॥ दोषा एवैते तस्याः परिभाषायाः—'तस्य दोषः संयोगादिलोपलत्वणत्वे'ष्विति ॥ [ हिनुमीना ] ।

## आनि लोट् ।८।४।१६।

लोडिति किमर्थम् ?॥ प्रहिमाणि कुलानि, प्रवपानि मांसानि ॥*॥ आनिलोड्ग्रहणानर्थक्यमर्थवद्ग्रहणात्॥*॥ आनिलोड्ग्रहणमनर्थकम् ॥ किं कारणम् ?॥ 'अर्थवद्ग्रहणात्' । अर्थवत आनिशब्दस्य ग्रहणं, नैषोऽर्थवान् । ॥*॥ अनुपसर्गाद्वा ॥*॥ अथ वा यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो, न चैतमानिशब्दं प्रति क्रियायोगः॥ इहापि तर्हि न प्राप्नोति—प्रयाणि,परियाणीति, अत्रापि नाऽऽनिशब्दं प्रति क्रियायोगः ॥ आनिशब्दं प्रत्यत्र क्रियायोगः ॥ कथम् ?॥ यत्क्रियायुक्ता इति,—नैवं विज्ञायते 'यस्य क्रिया यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत' इति.॥ कथं तर्हि ?॥ या क्रिया यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति ॥

---

**प्र.]** आनि लोट् । आनिशब्दमिति । क्रियायोगग्रहणस्यैव 'यत्क्रियायुक्तास्तं प्रती'ति व्याख्यानम् । योगश्चाऽर्थलक्षणः । तत्र प्रयोगविषया क्रियाऽऽश्रीयते । सा च न क्व चिदसंसृष्टाऽस्तीति समुदायस्था आश्रीयत इति आनिशब्दान्तसमुदायं प्रति क्रियायोगः । तत्राऽयं सूत्रार्थः—'उपसर्गात्परस्य समुदायस्य य आनिशब्दस्तन्नकारस्य णत्व'मिति । तदेवं प्रत्याख्यातं लोड्ग्रहणम् । [आनिलोट्]।

---

**उ.]** हिनुमी । भाष्ये—**स्थानिवत्त्वादिति** । बहिरङ्गाऽसिद्धत्वं तु न, त्रिपादीस्थेऽन्तरङ्गे तदप्रवृत्तेः । एकदेशविकृतन्यायेनापीदं सिध्यतीतीदं भाष्यमेकदेश्युक्तिरिति केचित् ॥

**आनि लोट्** । यत्क्रियेत्यत्र कर्मधारयाश्रयणे हेतुं दर्शयन् तत्पक्षे इष्टसिद्धिं दर्शयति—**क्रियायोगेति** । **प्रयोगविषयेति** । तस्या एव मुख्यत्वात् । ननु शास्त्रीयान्वयव्यतिरेकविषयेति भावः । **न क्वचिदिति** । पदस्यैव लोके प्रयोगात् । एतेन निरा समन्तान्नयति तत्कुलं

नेर्गद्नद्पतपद्घुमास्यतिहन्तियातिवातिद्रातिप्सातिवपति-
वहतिशाम्यतिचिनोतिदेग्धिषु च ।८।४।१७।

॥ * ॥ नेर्गदादिषु अड्व्यवाय उपसङ्ख्यानम् ॥ * ॥ नेर्गदादिष्वड्व्यवाय उपसङ्ख्यानं कर्त्तव्यम् । प्रण्यगदत् । परिण्यगदत् ॥*॥आङा च ॥*॥ आङा चेति वक्तव्यम् । प्रण्यागदत् । ननु चाऽयमड् गदादिभक्तो गदादिग्रहणेन ग्राहिष्यते ॥ न सिध्यति । अङ्गस्याऽडुच्यते, विकरणान्तं चाऽङ्गम् । सोऽसौ सङ्घातभक्तोऽशक्यो गदादिग्रहणेन ग्रहीतुम् ॥ एवं तर्ह्यड्व्यवाय इति वर्त्तते ॥ क्व प्रकृतम् ? ॥ 'अट्कुप्वाङ्नुम्व्यवायेऽपी'ति ॥ तद्वै कार्यिविशेषणं निमित्तविशेषणेन चेहार्थः ॥ तत्रापि निमित्तविशेषणमेव ॥

अनितेः ।८।४।१९। अन्तः ।८।४।२०।

अन्तग्रहणं किमर्थम् ? ॥*॥ अनितेरन्तग्रहणं संबुद्ध्यर्थम् ॥*॥ अनितेरन्तग्रहणं क्रियते ॥ [ किं प्रयोजनं ? ] ॥ 'संबुद्ध्यर्थम्' । हे प्राण् ।

अपर आह—॥*॥ अनितेरन्तः पदान्तस्य ॥*॥ अनितेरन्तग्रहणं क्रियते, 'पदान्तस्य ने'ति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् ॥*॥यो वा तस्मादनन्तरः॥*॥

---

प्र.] नेर्गदन । तदिति । तत्र हि निमित्तयो रेफषकारयोर्निमित्तिनश्च नकारस्याऽटा व्यवाय आश्रितः । इह तु नेः परे गदादयो व्यवहिता इति णत्वाऽप्रसङ्गः । तत्रापीति । यत्र यन्निमित्तं तत्राऽस्याऽडादिभिर्व्यवाये णत्वमिति गदादीनामपि निमित्तत्वसद्भावाद्व्यवाये णत्वं सिध्यतीत्यर्थः । [ नेर्गदनद ] ।

अनितेः । सम्बुद्ध्यर्थमिति । अनितेर्नकारोऽन्त एवेऽत्यन्तग्रहणसामर्थ्यात्पदस्याऽन्तो विज्ञायत इति 'पदान्तस्ये'ति प्रतिषेधो योगविभागेन बाध्यते । अपर आहेति—पाठभेदं दर्शयति । वस्तुतस्तु नाऽस्ति भेदः । यो वा तस्मा-

---

उ.] निरानीत्यादौ णत्वव्यावृत्त्यर्थं, तदुपसर्गत्वादर्थवत्त्वाच्चेति परास्तं, भाष्यप्रामाण्येन तथाप्रयोगानभिधानादिति दिक् । [ आनि लोट् ] ।

नेर्गद । कार्यिशब्देन नकारो गृह्यत इत्याह—नकारस्येति । 'नेः परे गदादय' इति पाठः । यत्र यदिति । पूर्ववत्परस्यापि निमित्तत्वान्निमित्तनिमित्तिनोरटा व्यवाये णत्वमित्यर्थः समान इत्यर्थः । [ नेर्गदनदपतपदघुमास्यति ] ।

अनितेरन्तः । संबुद्ध्यर्थत्वेऽपि योगविभागस्य पूर्वसूत्रेऽन्त इत्यपकृष्यते इत्याह—यो वेति । वाशब्दश्चाऽर्थे । सामर्थ्यादिति । अनितेः समीपे यो रेफस्तस्मान्नस्येति

अथ वा–अयमन्तशब्दोऽस्त्येवाऽवयववाची। तद्यथा–वस्त्रान्तो वसनान्त इति। अस्ति सामीप्ये वर्त्तते। तद्यथा–उदकान्तं गतः। उदकसमीपं गत इति गम्यते। तद्यः सामीप्ये वर्त्तते तस्य ग्रहणं विज्ञायते अनितेः समीपे यो रेफस्तस्मान्नस्य यथा स्यात्–प्राणितीति। इह मा भूत्—पर्यनितीति।

## उभौ साभ्यासस्य ।८।४।२१।

॥ * ॥ साभ्यासस्य द्वयोरिष्टम् ॥ * ॥ साभ्यासस्य द्वयोर्णत्वमिष्यते, प्राणिणिषति ॥ [ उभौ साभ्यासस्य ] ॥

---

प्र.] दिति। अस्मिन् पक्षे 'प्रा'णिति सम्बुद्ध्यर्थमावर्त्तनीयमन्तग्रहणम्। **तद्यः सामीप्य इति**। एकवर्णव्यवधानं च सामर्थ्यादाश्रीयते। 'पर्य्यनिती'त्यत्र तु वर्णद्वयव्यवधानाण्णत्वाऽभावः। [ **अनितेः** ]।

**उभौ साभ्यास**। **साभ्यासस्य द्वयोरिति**–उभौग्रहणस्य प्रयोजनं दर्शयति। उभावित्यस्मिन्नसति साऽभ्यासस्यानितेर्णो भवतीत्युच्यमाने वचनसामर्थ्याच्च पूर्वत्रासिद्धीयमद्विर्वचन इत्यनाश्रीयमाणेऽकृतणत्वस्य द्विर्वचने कृतेऽनन्तरस्य पूर्वेण णत्वस्य सिद्धत्वाद्व्यवहितार्थमिदं णत्वं स्यात्। अनन्तरस्य तु तक्रकौण्डिन्य-न्यायेन न स्यादित्युभावित्युच्यते। [ **उभौ साभ्यासस्य** ]॥

---

उ.] भाष्योक्तेरेकादेशस्य परादिवद्भावेन रेफस्याऽनितिसमीपत्वाऽक्षतेरिदं किमर्थमिति चिन्त्यं। यत्तु 'न पदान्त'सूत्रे नञ्यैर्निमित्तसमीपस्थो योऽनितेर्नकार इति, निमित्तसमीपस्थाऽनितेर्यो-नस्तस्य णत्वमिति द्वेधा व्याख्यानं भाष्ये स्थितमित्युक्तं, तत्कथं भाष्याक्षरस्वरससिद्धमिति चिन्त्यम्। अन्तशब्दश्चाऽत्राऽव्यवहितसमीपवाची, व्याख्यानात्। प्राणितीत्यत्र स्थानिवत्त्वं तु न, अपूर्वविधित्वात्पञ्चमीसमासस्याऽनित्यत्वाच्चेति दिक्। भाष्ये–**समीपे यो रेफ इति**। 'अन्त' इति विभक्त्यन्तरेण विपरिणम्यते इति भावः। [ **अनितेरन्तः** ]।

**उभौ साभ्या**। **वचनसामर्थ्याच्चेति**। अनेन तदनित्यत्वस्यापि ज्ञापनादिति भावः। 'साभ्यासस्ये'ति च 'गुणः कृतात्मसंस्कार' इति न्यायेनाऽनितेर्विशेषणं, न नस्य। एतेनाऽभ्याससहितनस्येत्यर्थे रमागमेन रोपधयोरिवाऽभ्यासनिवृत्त्यापत्तिरित्यपास्तम्। **तक्रकौण्डिन्येति**। वस्तुतस्तु एवं हि 'न' इत्यस्य षष्ठ्यन्तस्याधिकारादुभयोरिति वदेत्, अपूर्वस्येतिवत्। अतएव 'यो रेफस्तस्मान्नस्ये'ति 'अनिते'रित्यत्र भाष्ये उक्तं। किञ्चा-ऽभ्यासस्यानर्थकत्वात्तस्य पूर्वेण सिद्धिरित्यपि चिन्त्यं। तस्मात्साभ्यासग्रहणप्रयोजनपर-तयैवेदं भाष्यं योज्यम्। तथाहि–अभ्यासस्यानर्थक्यादुत्तरखण्डस्य व्यवहितत्वान्न पूर्वेणैक-स्याऽपि सिद्धिः। अत्र सूत्रेऽभ्यासेनेत्यभ्यासस्येति वा करणेऽपि द्वयोर्न सिद्धिः। अतः

## हन्तेरत्पूर्वस्य ८।४।२२।

हन्तेरत्पूर्वस्येति किमर्थम् ? ॥ प्रघ्नन्ति परिघ्नन्ति ॥ * ॥ हन्तेत्पूर्वस्य वचने उक्तम् ॥ * ॥ [ हन्तेरत्पूर्वस्य वचने उक्तम् ]। किमुक्तम् ? ॥ 'कुव्यवाये हादेशेषु प्रतिषेध' इति ॥ [ हन्तेरत्पूर्वस्य ] ॥

## उपसर्गादनोत्परः ८।४।२८।

कथमिदं विज्ञायते–ओकारात्परः–ओत्परः, न ओत्परोऽनोत्पर इति, आहो स्विदोकारः परोऽस्मात्सोऽयमोत्परः, न ओत्परोऽनोत्पर इति ?॥ किं चातः ? ॥ यदि विज्ञायते 'ओकारात्परः ओत्परः, न ओत्परोऽनोत्पर इति,– प्र नो मुञ्चतम्—अत्रापि प्राप्नोति । अथ विज्ञायते–ओकारः परोऽस्मात्सोऽयमोत्परः, न ओत्परोऽनोत्पर इति,–प्राणो वनिर्देवकृता,–अत्र न प्राप्नोति ॥ उभयथा च प्रक्रमे दोषो भवति। प्र नः मुञ्चतम्–प्र नो मुञ्चतम् । प्र उ नः–प्रोनः ॥ *॥ भाविन्यप्योति नेष्यते ॥ * ॥ भाविन्यप्योकारे णत्वं नेष्यते ॥ एवं तर्ह्युपसर्गाद्बहुलमिति वक्तव्यम् ॥ [ उपसर्गादनोत्परः ] ॥

---

प्र.] उपसर्गादनोत्परः। उभयथा च प्रक्रम इति । प्रक्रमो ग्रन्थपरिचयाऽर्थः क्रमपाठः । भाविन्यपीति । यद्यपि क्रमपाठे ओकारो नास्ति, संहितापाठे तु भावीति णत्वं न प्रवर्त्तते, सांप्रतिकसद्भावे तु भाविगतिर्दुलभेति पाठान्तरमाश्रितम्। अथवोभयथा च प्रक्रमे इत्यस्याऽयमर्थः,–उभयथा चाश्रीयमाणे इह दोष इति । भाविनीति । ओकारार्थ उकार ओशब्देनोच्यत इत्यर्थः । मुख्यार्थसम्भवे गौणार्थग्रहणमयुक्तमिति पाठान्तरसमाश्रयः ।

---

उ.]साभ्यासस्येत्युक्तमिति। अतएव वार्तिककृता साभ्यासस्येति पदं गृहीत्वा 'द्वयोरिष्ट'मित्युक्तम्। उभौग्रहणप्रयोजनं तु 'एकःपूर्वपरयो'रित्यत्र भाष्ये उक्तम्–आदेशद्वयलाभार्थमिति । अन्यथा ऊडत् रम्वच्च सकृत्प्रवृत्त्यैवोभयोर्निवृत्तौ स्थान्यभावादेव पुनः प्रवृत्त्यभावेनादेशद्वयलाभो न स्यात्। एवं च भाष्ययोर्न विरोध इति दिक्। [ उभौ साभ्यासस्य ] ।

उपसर्गादनोत्परः । भाष्ये–उभयथा चेति । तन्त्रेण समासद्वयाऽङ्गीकारे इत्यर्थः । प्रक्रमे दोष इत्यत्र 'प्रक्रम'शब्दार्थमाह–ग्रन्थेति। क्रमपाठ इति। पदसंहितयोर्द्वयोरपि तुल्यकालमभ्यासार्थः पाठः क्रमपाठ इत्युच्यते। अत्र व्याख्याने 'क्रमे' इत्येव सिद्धे 'प्र'शब्दो व्यर्थोऽतः पक्षान्तरमाह–अथवेति । ओकारार्थ इति । ओकारे उकारश्च ओकारशब्देनोच्यत इत्यर्थः । मूलेऽन्यतरग्रहणमुपलक्षणं बोध्यम् । अत्र पाठान्तराश्रयणे बीजमाह–

## कृत्यचः । ८।४।२९ ॥

॥ * ॥ कृत्स्थस्य णत्वे निर्विण्णस्योपसङ्ख्यानम् ॥ * ॥ **कृत्स्थस्य णत्वे निर्विण्णस्योपसङ्ख्यानं कर्तव्यम् । निर्विण्णोऽहमनेन वासेन॥** [ कृत्यचः ]॥

## णेर्विभाषा । ८।४।३० ॥

॥ * णेर्विभाषायां साधनव्यवाये उपसङ्ख्यानम् ॥ * ॥ **णेर्विभाषायां साधनव्यवाये उपसङ्ख्यानं कर्त्तव्यम् । प्राप्यमाणं प्राप्यमानम्** ॥*॥ तद्वि[3]-धानात्सिद्धम् ॥*॥ **[तद्विधानात्सिद्धम्][1]। विहितविशेषणं णिग्रहणं 'ण्यन्ताद्यो विहित' इति** ॥*॥ अडधिकाराद्वा ॥ * ॥ **अथ वाऽड्व्यवाय इति वर्तते ॥**

## इजादेः सनुमः ।८।४।३२ ॥

**किमर्थमिदमुच्यते न 'कृत्यच' इत्येव सिद्धम् ?** ॥ * ॥ नियमार्थोय-मारम्भः॥*॥**[नियमार्थोऽयमारम्भः][1]। इजादेरेव च सनुम्कान्नान्य[3]स्मात्सनुम्का-दिति । क्व मा भूत् ? ॥ प्रमङ्कनं परिमङ्कनम्** ॥*॥ सनुमो णत्वेऽवधारणाऽ-

---

**प्र.] कृत्यचः । निर्विण्णस्येति ।** अचः परः कृत्स्थो नकारो न भवतीति वच-नम् । तत्र परस्य णत्वं, पूर्वस्य ष्टुत्वम् । **[ कृत्यचः ]** ।

**णेर्वि** । णेरिति पञ्चमीनिर्देशादनन्तर एव कृति णत्वं स्यादिति णेरितिवार्त्तिका-रम्भः । **साधनव्यवाय इति ।** साधनाऽभिधायिनि सार्वधातुके विधानाद्विकरणः 'साधन'शब्देनोच्यते । विकरणः साधनाभिधायीति केषांचिन्मतेन वा । **तद्विधानादिति ।** सूत्रेषु यथेष्टं वाक्यशेषाध्याहाराण्ण्यन्ताद्यो विहितः कृदि-त्याश्रीयते । **अडधिकाराद्वेति ।** 'ण्यन्तात्परो यः कृ'दित्येवमप्याश्रीयमाणे न दोषो, ण्यन्तस्य कृतां चाड्व्यवायेपि णत्वाभ्यनुज्ञानात् । **[ णेर्विभाषा ]** ।

**इजादेः। सनुमो णत्व इति।** नियमे प्राप्तबाधः, सिद्धस्य पुनरुपादानादनु-

---

**उ.] मुख्यार्थेति । पाठान्तरेति ।** उभयथाचार्येण शिष्येभ्यः सूत्रं पाठितमिति भावः । यद्वा **पाठान्तर**शब्देन न्यासान्तरम् । **[ उपसर्गादनोत्परः ]**।

**णेर्विभाषा । साधनाभिधायिनीति ।** निमित्तनिमित्तिनोरभेदोपचाराद्गौणोऽयं व्यपदेश इत्यर्थः । **विकरण इति ।** अत्र पक्षे साधनशब्देन साधनाभिधायी उच्यते । तस्मादिति परिभाषायां सत्यां कथं विहितविशेषणलाभोऽत आत-**सूत्रेष्विति ।** विहित-पदाध्याहारसामर्थ्यात्तस्या अत्राऽप्रवृत्तिरिति भावः । परिभाषाप्रवृत्त्यभिप्रायेण पक्षान्तर-मित्याह-**ण्यन्तात्पर इति ।** [ णेर्विभाषा ] ।

प्रसिद्धिर्विधेयभावात् ॥*॥ **सनुमो णत्वेऽवधारणस्याऽप्राप्तिः** ॥ **किं कारणम् ?**॥ **'विधेयभावात्'** ॥ **कैमर्थ्यान्नियमो भवति ?** ॥ **विधेयं नास्तीति कृत्वा** ॥ **इह चाऽस्ति विधेयम्** ॥ **किम् ?** ॥ **ण्यन्ताद्विभाषा प्राप्ता तत्र नित्यं णत्वं विधेयम्** ॥ **तत्राऽपूर्वो विधिरस्तु नियमोऽस्त्विति, अपूर्वो विधिर्भविष्यति न नियमः** ॥ * ॥ सिद्धं तु प्रतिषेधाधिकारे सनुम्ग्रहणात् ॥ * ॥ **सिद्धमेतत्** ॥ **कथम् ?** ॥ **'प्रतिषेधाधिकारे सनुम्ग्रहणात्'। प्रतिषेधाधिकारे सनुम्ग्रहणं कर्त्तव्यं 'न भाभूपूकमिगमिप्यायीवेपि-सनुमा'मिति** ॥ इहापि तर्हि न प्राप्नोति–प्रेङ्क्णीयम् । प्रेङ्क्णम् ॥ * ॥ कृत्स्थस्य च णत्वे इजादेः सनुमो ग्रहणम् ॥*॥ **कृत्स्थस्य च णत्वे इजादेः सनुमो ग्रहणं कर्त्तव्यम्** ॥ **सिध्यति । सूत्रं तर्हि भिद्यते** ॥ **यथान्यासमेवास्तु** ॥ ननु चोक्तं–'सनुमो णत्वेऽवधारणाप्रसिद्धिर्विधेयभावा'दिति ॥ **नैष दोषः । 'हल' इति वर्त्तते** ॥ **क्व प्रकृतम् ?** ॥ **'हलश्चेजुपधा'दिति** ॥ **तद्वै तत्रादि-विशेषणमन्तविशेषणेन चेहार्थः**॥ **कथं पुनर्ज्ञायते–'तत्रादिविशेषण'मिति ?**॥ **'इजुपधा'दित्युच्यते तत्र नाऽर्थोऽन्तविशेषणेन** ॥ **तत्रादिविशेषणं सदिहाऽन्तविशेषण भविष्यति** ॥ **कथम् ?** ॥ **'इजादे'रित्युच्यते तत्र नाऽर्थ आदि-विशेषणेन** ॥ **अथ वा 'इजादेः सनुम' इत्यत्र 'णेर्विभाषे'त्येतदनुवर्त्तिष्यते**॥

## न भाभूपूकमिगमिप्यायीवेपाम् ।८।४।३४।

॥ * ॥ भादिषु पूञ्ग्रहणम् ॥ * ॥ **भादिषु पूञ्ग्रहणं कर्त्तव्यम्** ।

---

**प्र.]** वाददोषश्च। विधौ तु न प्राप्तबाधो नाप्यनुवाददोष इति विधिनियमसंभवे विधिरेव ज्यायानिति भावः। **सिद्धं त्विति**। तेन 'प्रमङ्क्न'मित्यादौ णत्वं न भवति। तत 'इजादेः सनुम' इति योगो विध्यर्थः सम्पद्यते। **तत्र नाऽर्थोऽन्तविशेषणेनेति**। इजुपधस्य हलन्तत्वाऽव्यभिचारात्सामर्थ्यात्तत्रादिविशेषणं हल्ग्रहणम्। **तत्र नार्थं इति**। इजादेर्हलादित्वाऽसम्भवादन्तविशेषणं हल्ग्रहणं सम्पद्यत इति 'हल-न्तादिजादेः सनुमो यो विहितः कृत्तत्रस्थस्ये'त्येवं विज्ञायमाने ण्यन्ताद्विध्यर्थोऽयं योगो न भवतीति नियमाय सम्पद्यते। [ **इजादेः सनुमः** ]।

---

**उ.] इजादेः सनुमः**। नियमाद्विधेर्ज्यायस्त्वे बीजमाह–**नियम इति**। **विध्यर्थं इति**। सर्वत्र सनुमो निषेधेनाऽप्राप्तेरिति भावः। [ **इजादेः सनुमः** ]।

इह माभूत्—प्रपवणं सोमस्येति ॥ * ॥ ण्यन्तस्य चोपसङ्ख्यानम् ॥ * ॥ ण्यन्तस्य चोपसङ्ख्यानं कर्त्तव्यम् ॥ किं पूञ एव? ॥ 'ने'त्याह ॥ * ॥ अविशेषेण[1] ॥ * ॥ प्रभापनं परिभापनम् ॥

## षात्पदान्तात् ।८।४।३५।

॥ * ॥ षात्पदादिपरवचनम् ॥ * ॥ षात्पदादिपरग्रहणं कर्त्तव्यम् । इहैव यथा स्यात्-निष्पानं दुष्पानम् । इह मा भूत्-सुसर्पिष्केण[2] सयजुष्केण[3] ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । नैवं विज्ञायते-'पदस्यान्तः पदान्तः, पदान्ता'दिति ॥ कथं तर्हि? ॥ पदे अन्तः पदान्तः, पदान्तादिति ॥

## नशेः षान्तस्य ।८।४।३६।

॥*॥ नशेरशः ॥*॥ नशेरश इति वक्तव्यम् । इहापि यथा स्यात्—प्रनङ्क्ष्यति । परिनङ्क्ष्यति ॥ तत्तर्हि वक्तव्यं ? ॥ न वक्तव्यम् । इह पुनर्नशेः[4] ष इतीयता सिद्धं, सोऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तस्यैतत्प्रयोजनं षान्तभूतपूर्वस्यापि यथा स्यात् ॥ [ नशेः षान्तस्य ] ॥

## पदव्यवायेऽपि ।८।४।३८।

---

प्र.] न भा । ण्यन्तस्य चेति । ण्यन्तस्य धात्वन्तरत्वान्निषेधो न प्राप्नोतीति वचनम् ।

षात्प । षात्पदादीति । 'पदादौ परतो यः षकारस्तस्मात्परस्य पदस्य यो नकारस्तस्य णत्वं न भवती'त्यर्थः । पदेऽन्त इति । 'षात्पदा'दित्येव षकारेण पदस्य विशेषणात्षान्तात्पदादिति लब्धेऽर्थेऽन्तग्रहणात्सप्तमीसमास आश्रीयते ॥

नशेः षान्त । प्रनङ्क्ष्यतीति । नशेः षत्वे 'षढोः कः सी'ति कत्वे कृते रूपं । 'मस्जिनशोर्झली'ति नुमागमः । स च षत्वात्पूर्वमेव प्रवर्त्तते, पूर्वत्राऽसिद्धमिति-वचनात् । षान्तेति । अन्तग्रहणसामर्थ्याद्यश्च संप्रति षान्तो यश्च भूतपूर्वस्तस्य सर्वस्य णत्वनिषेधः । [ षात्पदान्तात् ] ॥

---

उ.] न भाभू । धात्वन्तरत्वादिति । 'प्रभायमान'मित्यादि सिद्धये 'भादिभ्य' इति विहितविशेषणमिति भावः । [ नभाभूपू ] ।

षात्पदा । सप्तमीसमास इति । 'पदे' इत्येव तु नोक्तं, विधेयविशेषणत्वशङ्कावारणार्थत्वात् । अत्र पक्षे 'निष्पान'मित्यादौ सुबुत्पत्त्यनन्तरमेव समासोऽङ्गीकार्यः । पदग्रहणं वा तद्योग्यपरम् । [ षात्पदान्तात् ] ।

॥ * ॥ पदव्यवायेऽतद्धिते ॥ * ॥ पदव्यवायेऽतद्धित इति वक्तव्यम्। इह मा भूत्–आर्द्रगोमयेण शुष्कगोमयेण ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । नैवं विज्ञायते 'पदेन व्यवायः पदव्यवायः, पदव्यवाये'इति ॥ कथं तर्हि ? ॥ पदे व्यवायः पदव्यवायः, पदव्यवाय इति ॥ [पदव्यवायेऽपि] ॥

## क्षुभ्नादिषु च ।८।४।३९।

॥ * ॥ अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु ॥ * ॥ [ अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु ] द्रष्टव्यः ॥ [ क्षुभ्नादिषु च ] ॥

## स्तोः श्चुना श्चुः ।८।४।४०।

किमर्थं तृतीयानिर्देशः क्रियते न श्चावित्येवोच्येत ?॥ आनन्तर्यमात्रे श्चुत्वं यथा स्यात्–यज्ञः राज्ञः याच्ञा ॥ अथ सङ्ख्यातानुदेशः कस्मान्न भवति ?॥ आचार्यप्रवृत्तिर्ज्ञापयति–'सङ्ख्यातानुदेशो ने'ति यदयं शात्प्रतिषेधं शास्ति ॥

## ष्टुना ष्टुः ।८।४।४१।

किमर्थं तृतीयानिर्देशः क्रियते न ष्टावित्येवोच्येत ? ॥ आनन्तर्यमात्रे

---

क्षुभ्नादिषु । अविहितेति । 'न भाभूपूकमिगमी'त्यादयस्तु योगा अस्यैव प्रपञ्चार्थाः ।

---

उ.] पदव्यवायेऽपि । भाष्ये–अतद्धित इति । व्यवधायकपदस्य तद्धितभिन्नपरत्वं चेदित्यर्थः । पदव्यवाय इति । सविशेषणत्वेऽपि सौत्रत्वाद्वृत्तिरिति भावः । नस्य तु न विशेषणम् , आर्द्रगोमयेणेत्युदाहरणाऽसङ्गतेः । पदे व्यवाय इति । अतएव 'रम्यवीणे'त्यादौ 'प्रातिपदिकान्ते'ति णत्वं भवत्येव । वार्तिकमतेऽपि एकवाक्यतया णत्वाश्रयातिरिक्ततद्धितभिन्ने परतः पदेन व्यवाये नेत्यर्थान्न दोषः । न चोत्तरपदत्वे चापदादिविधाविति निषेधादुदाहरणदौर्लभ्यम् । अदादिविधाविति पर्युदासेन पदान्तविधावेव निषेधप्रवृत्तेः,प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तेश्च, 'असर्वनामस्थाने यचि भ'मिति तत्प्रत्याख्यानप्रकारोऽपि योगविभागस्येष्टसिद्ध्यर्थतया पदान्तविधिविषय एवेति भावः ।

क्षुभ्नादि । अविहितेति । अविहितो लक्षणेन णत्वप्रतिषेधो यस्येत्यर्थः । भिन्नपदपाठे णत्वप्रतिषेधशब्देनाऽर्शआद्यचा तद्वानुच्यते। 'अविहितलक्षण'इत्यस्याऽकृतशास्त्र इत्यर्थः ।

स्तोः श्चु । आनन्तर्यमात्रे इति । पूर्वस्मिन् परस्मिंश्चेत्यर्थः । अत्र संयोग इत्यध्याह्रियते । तेन 'चित'मित्यादौ न दोषः । अतएव 'चिततूलभारिषु', 'डतरादिभ्य' इत्यादिनिर्देशाः सङ्गच्छन्ते । [ स्तोः श्चुना श्चुः ] ॥

ष्टुत्वं यथास्यात्-पेष्टा लेढा[1] ॥ अथ सङ्ख्यातानुदेशः कस्मान्न भवति ? ॥ आचार्यप्रवृत्तिर्ज्ञापयति 'नेह सङ्ख्यातानुदेशो भवती'ति, यदयं 'तोःषी'ति प्रतिषेधं शास्ति ॥ [ ष्टुना ष्टुः ] ॥

## न पदान्ताट्टोरनाम् ।८।४।४२।

अनामिति किमर्थम्[2] ? ॥ षण्णां भवति काश्यपः ॥ अत्यल्पमिदमुच्यते-'अना'मिति ॥*॥ अनाम्नवतिनगरीणां चेति वक्तव्यम् ॥*॥ षण्णाम् । षण्णवतिः । षण्णगर्यः[3] ॥ [ न पदान्ताट्टोरनाम् ] ।

## यरोऽनुनासिकेऽनुनासिको वा ।८।४।४५।

॥*॥ यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनम् ॥*॥ । यरोऽनुनासिके प्रत्यये भाषायां नित्यमिति च वक्तव्यम् । वाङ्मयम् । त्वङ्मयमिति ॥

## अनचि च । ८।४।४७।

॥*॥ द्विर्वचने यणो मयः ॥*॥ द्विर्वचने यणो मय इति वक्तव्यम् ॥ किमुदाहरणम् ? ॥ यदि यण इति पञ्चमी मय इति षष्ठी उल्क्का वल्म्मीकमित्युदाहरणम् ॥ अथ मय इति पञ्चमी यण इति षष्ठी दध्य्यत्र मध्व्वत्रेत्युदाहरणम्? ॥*॥शरःखयः॥*॥ शरःखय इति वक्तव्यम्॥ किमुदाहरणम्? ॥ यदि'शर' इति पञ्चमी'खय'इति षष्ठी 'स्थ्थाली स्थ्थाते'त्युदाहरणम् । अथ 'खय' इति पञ्चमी 'शर' इति षष्ठी, वत्स्स[र]ः क्ष्षीरम् अफ्स्सरा इत्युदाहरणम् । ॥*॥ अवसाने च ॥*॥ अवसाने च द्वे भवत इति वक्तव्यम् । वाक्क् । वाक् । त्वक्क् त्वक् । स्रुक्क् स्रुक् ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥ नायं प्रसज्यप्रतिषेधः-'अचि ने'ति ॥ किं तर्हि ? ॥ पर्युदासोऽयं 'यदन्यदच' इति ॥

---

प्र.] अनचि च । नायं प्रसज्यप्रतिषेध इति । पाठोऽयं लेखकप्रमादान्नष्टः,-"पर्युदासे ह्यच्सदृशस्य वर्णान्तरस्य निमित्तत्वेनोपादानादवसाने द्विर्वचनस्याऽ-

उ.] अनचि च । भाष्ये-क्षीरमिति । अव्युत्पत्तिपक्षे इदं । व्युत्पत्तिपक्षे घसः क्रीरन्प्रत्यये अल्लोपे पूर्वत्रासिद्धमद्वित्वे इति चर्त्वे खयः परत्वं बोध्यम् । एतेन 'द्वित्वे परसवर्णत्वंसिद्धं वक्तव्य'मिति वचनसामर्थ्यादस्य वर्णद्वित्वेऽप्रवृत्तेः, प्रवृत्तौ वा द्वित्वभाज एवाऽसिद्धत्वनिषेधकमेतदित्यपास्तम । मानाभावाच्च । तस्मादस्यैव तत्प्रपञ्च इति बोध्यम् । 'शरोऽची'ति तु सौत्रस्यैव निषेधः । तदेव ध्वनयन्नाह-वाक्क् इति । अन्यथा चर्त्वस्याऽसिद्धत्वाद्गस्यैव

## नादिन्याक्रोशे पुत्रस्य ।८।४।४८।

॥*॥ नादिन्याक्रोशे पुत्रस्येति तत्परे च ॥*॥ **नादिन्याक्रोशे पुत्रस्ये-त्यत्र 'तत्परे चे'ति वक्तव्यम् ।** पुत्रपुत्रादिनि ॥*॥ वा हतजग्धपरे च ॥*॥ **वा हतजग्धपरे इति वक्तव्यम् । पुत्रहती । पुत्रहती । पुत्रजग्धी । पुत्र-जग्धी ।** ॥ * ॥ चयो द्वितीयाः शरि पौष्करसादेः ॥ * ॥ **चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन । वथ्सः । ख्षीरम् । अफ्सराः ।** [ नादिन्याक्रोशे पुत्रस्य ] ॥

---

**प्र.]** प्रसङ्गात् । तस्मात् "नायं पर्युदासो यदन्यदच इति ॥ किं तर्हि—प्रसज्यप्रति-षेधोऽचि ने"त्ययं पाठः । तत्र प्रसज्यप्रतिषेधे विधिरनुमीयते । अच उत्तरस्य यरो नूनं द्विर्वचनं सर्वत्राऽस्ति यतोऽचि प्रतिषिध्यते । एवं चाऽनैमित्तिकं द्विर्वचन-मवसानेऽपि भवति । वेत्यधिकाराच्च वा भवति । [ **अनचि च** ] ॥

**नादिन्या । वा हतजग्धपर इति ।** हत जग्धं च तत्परं चेति विशेषणसमासो, राजदन्तादित्वाच्च परशब्दस्य परनिपातः । **पुत्रहतीति ।** बहुव्रीहिः । 'अस्वाङ्ग-पूर्वपदाद्वे'ति वा ङीष् । [ **नादिन्याक्रोशे** ] ॥

---

**उ.]** द्वित्वेऽन्त्यस्य वाऽवसान इति चर्त्वे पूर्वत्र गस्यैव श्रवणं स्यात् , न च तस्यापि 'खरि'चेति चर्त्वं,वाऽवसान इत्यस्यासिद्धत्वेन खर्परत्वाऽभावात् । प्रकरणे 'प्रकरणमसिद्ध'मिति पक्षस्त्वभ्युच्चय इति स्पष्टमेव 'असमासेऽपी'ति सूत्रे कैयटे । न चाऽसिद्धत्वाभावेऽपि वावसान इति चर्त्वस्याऽसिद्धत्वाद्गकारे झशि परे झलां जशीति जश्त्वे उक्तरीत्यैव चर्त्वाभावे गश्र-वणं दुर्वारम् । अस्मादेव भाष्योदाहरणात्पूर्वत्रासिद्धमित्यस्य द्वित्वे कर्तव्येऽसिद्धत्वं न, कृते च तस्मिन्प्रत्यासत्त्या द्वित्वाश्रयस्य कार्ये कर्तव्ये द्वित्वातिरिक्तस्यासिद्धत्वं नेत्यर्थान्न दोष इत्याहुः । **इत्ययं पाठ इति ।** पूर्वपाठेऽपि ' न वक्तव्य'मित्यस्य 'सूत्रेण सिद्धेरि'ति शेषः । तत्खण्डयति आरंभवादीति योजनीयमित्यन्ये । **अचउत्तरस्येति ।** चकारो वा विध्यर्थं इति बोध्यम् । द्वित्वाभावविशिष्टस्यापि भाष्ये उदाहरणादाह—**वेत्यधिकाराच्चेति ।** 'सर्वत्र शाकल्यस्ये'ति वा विकल्प इति बोध्यम् । [ **अनचि च** ] ।

**नादिन्या । तत्परे इति,** षष्ठ्यर्थे सप्तमी । पुत्रशब्दपरे पुत्रशब्दे विद्यमानस्य यर इति वार्थः। सूत्रे आदिनीति लुप्तसप्तमीकमित्याशयेनोदाहरति—**पुत्रपुत्रादिनीति ।** आक्रो शस्य स्त्रीष्वेव प्रसिद्धत्वाच्च । अतएव पूर्वसाहचर्याच्च हतजग्धयोरपि स्त्रियामेव । तदाह— **पुत्रहतीति । अस्वाङ्गेति ।** तत्र 'जाते' रित्यस्य संबन्धादिदं चिन्त्यम् । पुत्रशब्दस्याऽ-जातित्वात् । तस्माद्गौरादिष्विमौ पाठ्यावित्याहुः । **वथ्साः अफ्सरा इति ।** नचात्राऽऽद्ये

## उदः स्थास्तम्भोः पूर्वस्य ।८।४।६१।

॥ * ॥ उदः पूर्वत्वे स्कन्देश्छन्दस्युपसङ्ख्यानम् ॥ * ॥ उदः पूर्वत्वे स्कन्देश्छन्दस्युपसङ्ख्यानं कर्त्तव्यम् ॥ अघ्न्ये दूरमुत्कन्द ॥ ॥*॥ रोगे च ॥*॥ रोगे चेति वक्तव्यम् । उत्कन्दको रोगः ॥

## शश्छोऽटि ।८।४।६३।

॥*॥ छत्वममि [तच्छ्लोकेन तच्छमश्रुणेति प्रयोजनम्] ॥*॥ छत्वममीति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ तच्छ्लोकेन तच्छ्मश्रुणेति ॥

## [ अभ्यासे चर्च ।८।४।५४।

प्रकृतिचरां प्रकृतिचरो भवन्ति । चिचीषति । प्रकृतिजशां प्रकृतिजशश्च भवन्ति । जिजनिषति । बुबुधे । ददौ ॥ [ अभ्यासेचर्च ] ॥ ]

## झरो झरि सवर्णे ।८।४।६५।

सवर्णग्रहणं किमर्थम् ॥ * ॥ झरो झरि सवर्णग्रहणं समसङ्ख्यप्रतिषेधार्थम् ॥ * ॥ झरो झरि सवर्णग्रहणं क्रियते ॥ [ किं प्रयोजनं ? ] ॥ 'समसङ्ख्यप्रतिषेधार्थम्' ॥ सङ्ख्यातानुदेशो मा भूदिति ॥ किं च स्यात् ? ॥ इह न स्यात्–शिण्ढि पिण्ढि ॥ [ झरो झरि ]

## अ अ इति ।८।४।६८।

किमर्थमिदमुच्यते ? ॥ अकारोऽयमक्षरसमाम्नाये विवृत उपदिष्टस्तस्य

---

**प्र.]** झरो झरि सवर्णे । शिण्ढीति । डकारस्य ढकारे परतो लोपः । यथासङ्ख्याश्रयणे तु न स्यात् । सवर्णग्रहणात्तु–यथासङ्ख्याऽभावः । नहि यथासङ्ख्ये सत्यसवर्णो झरस्ति यद्व्यावृत्त्यर्थं सवर्णग्रहणं स्यात् । **[ झरो झरि ]**

**अ अ । किमर्थमिति ।** अकारस्याऽकारवचने प्रयोजनाऽभावात्प्रश्नः । **अका-**

---

**उ.]** वदेः सः, अन्त्येऽप्पूर्वात्सर्तेरसिः उभयत्रापि चर्त्वेन चर्यिति चर्त्वस्याऽसिद्धत्वात्कथमेतदुदहरणमिति वाच्यम् । पाणिनिमतसिद्धाऽव्युत्पत्तिपक्षाभिप्रायेण सत्त्वात् ।

**उदःस्था । उत्कन्दक इति ।** न च सस्यान्तरतम्यात्थकारे तस्याऽसिद्धत्वाच्चर्त्वं दुर्लभं, भाष्येऽभ्यासे चर्चेत्यस्य परत्र पाठेन चर्त्वस्यैव परत्वेन तं प्रत्यस्याऽसिद्धत्वाभावादित्याहुः । वृत्त्युक्तः पाठस्तु चिन्त्य एव । **[ उदःस्थास्तम्भोः ]**

**अभ्यासे चर्च ।** अन्तरतमपरिभाषालब्धार्थमन्वाचष्टे–**प्रकृतिचरामिति ॥**

**झरो झरि सवर्णे । डकारस्य ढकार इति ।** ष्टुत्वजश्त्वादीनां पूर्वत्वादिति भावः ।

**संवृतताप्रत्यापत्तिः क्रियते ॥ किं पुनः कारणं विवृत उपदिश्यते ? ॥**

॥*॥ आदेशार्थं सवर्णार्थमकारो विवृतः स्मृतः ।
आकारस्य तथा ह्रस्वस्तदर्थं पाणिनेर अ ॥*॥१॥

आदेशार्थं तावत्—**वृक्षाभ्याम् । देवदत्ता३ । आन्तर्यतो विवृतस्य विवृतौ दीर्घप्लुतौ यथा स्याताम् ।** सवर्णार्थं च—**अकारः सवर्णग्रहणेनाऽऽकारमपि यथा गृह्णीयात् ।** अकारस्य तथा ह्रस्वः । **तथा [ च ] अतिखट्वः अतिमाल इत्यत्र आकारस्य ह्रस्व उच्यमानो विवृतः प्राप्नोति, संवृतः स्यादित्येवमर्थां प्रत्यापत्तिः ॥ अस्ति प्रयोजनमेतत् । किं तर्हीति** ॥*॥ अकारस्य प्रत्यापत्तौ दीर्घप्रतिषेधः ॥ * ॥ **अकारस्य प्रत्यापत्तौ दीर्घस्य प्रतिषेधो वक्तव्यः ॥ खटा माला ॥ नैष दोषः ॥ यथैव प्रकृतितः सवर्णग्रहणमेवमादेशतोऽपि भवितव्यं, तत्रान्तर्यतो ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घो भविष्यति ॥**

---

**प्र.]शेयमिति ।** सवर्णार्थमिह शास्त्रे विवृतदोषयुक्तोऽकार उपदिष्टस्तस्य प्रयोगे संवृतस्यैवोच्चारणार्थमिदं प्रत्यापत्तिवचनम् । अक्षरसमाम्नायग्रहणं सकलशास्त्रोपलक्षणम् । **किं पुनरिति ।** कस्मात्पुनः कारणादित्यर्थः । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'मिति प्रथमा । श्लोकोपन्यासाय प्रश्नः । प्रयोजनं तु 'अकारस्य विवृतोपदेश आकारग्रहणार्थः । तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थ' इति वार्तिककृता पूर्वमेव प्रतिपादितम् । **आदेशार्थमिति ।** अत्रापि प्रयोजनं विवृतोपदेशस्योक्तम् ,—वृक्षभ्यामिति । यद्यपीदं प्रयोजनमकारवार्तिके भाष्यकृता प्रत्याख्यातं 'नैव लोके नचवेदे दीर्घप्लुतौ संवृतौ स्तः किं तर्हि विवृतौ' यौ स्तस्तौ भविष्यत'इति; तथापि प्रयोजनान्तरसद्भावादिह प्रत्याख्यानादरो न कृतः, पूर्वमेव वा प्रत्याख्यानात् । **आकारस्येति ।** इदमपि प्रत्याख्यातं प्रयोजनं—'नैव लोके नच वेदेऽकारोऽस्ति विवृत'इति । **दीर्घप्रतिषेध इति ।** दीर्घस्योपलक्षणा·

---

**उ.]** अ अ । **सवर्णार्थमिति ।** सवर्णग्रहणार्थमित्यर्थः । **तस्य प्रयोगे इति ।** शास्त्रे विवृतोपदेशात्प्रयोगेऽपि तथैव श्रूयेताऽतस्तन्निवृत्त्यर्थमित्यर्थः । **प्रत्यापत्तीति ।** संवृत एव कार्यार्थं विवृतत्वारोपाद्दोषमात्रनिरासेन तथा व्यवहार इति भावः । **उपलक्षणमिति ।** संपूर्णशास्त्रदृष्ट्याऽस्याऽसिद्धत्वादिति भावः । ननु विवृतोपदेशप्रयोजनस्य अइउणित्यत्रोक्तत्वात् पुनः प्रश्नो व्यर्थोऽत आह—**श्लोकेति ।** श्लोकवार्तिकव्याख्यानायेत्यर्थः । प्रयोजनान्तरकथनाच्च न पौनरुक्त्यमित्याह—**अत्रापीति । प्रयोजनान्तरेति ।** सवर्णग्रहणार्थत्वरूपेत्यर्थः । **इदमपीति ।** एवञ्च सवर्णार्थैव प्रत्यापत्तिरिति भावः । प्रतिषे·

॥*॥ आदेशस्य चानण्त्वान्न सवर्णग्रहणम् ॥*॥ आदेशस्य चाऽनण्त्वात्सवर्णानां ग्रहणं न प्राप्नोति ॥ केषाम् ? ॥ उदात्तानुदात्तस्वरितानुनासिकानाम् ।

॥*॥ सिद्धं तु तपरनिर्देशात् ॥ * ॥ सिद्धमेतत् ॥ कथम् ? ॥ 'तपरनिर्देशात्' । तपरनिर्देशः कर्तव्यः–'अद्' इति ॥

अपर आह–॥*॥ अकार[स्य]प्रत्यापत्तौ दीर्घप्रतिषेधः ॥ * ॥ अकारस्य प्रत्यापत्तौ दीर्घस्य प्रतिषेधो वक्तव्यः। खट्वा माला ॥ नैष दोषः ॥ दीर्घोच्चारणसामर्थ्यान्न भविष्यति ॥ इदं तर्हि–वृक्षाभ्यां प्लक्षाभ्याम् ॥ अत्रापि दीर्घवचनसामर्थ्यान्न भविष्यति ॥ इदं तर्हि–अपि काकः श्येनायते ॥ ननु चाऽत्रापि दीर्घवचनसामर्थ्यादेव [तत्] न भविष्यति ॥ अस्त्यन्यद्दीर्घवचने प्रयोजनम् ॥ किम् ? ॥ दधीयति मधूयति ॥ [* ॥ आदेशस्य चानण्त्वात्सवर्णाग्रहणम् ॥ *]॥ आदेशस्य चाऽनण्त्वात्सवर्णानां ग्रहणं न प्राप्नोति ॥ केषाम् ? ॥ उदात्तानुदात्तस्वरितानुनासिकानाम् ॥ * ॥ सिद्धं तु तपरनिर्दे-

---

प्र.] र्थत्वात्प्लुतस्याऽपि प्रतिषेधो वक्तव्यः। क्वचित्तु 'दीर्घप्लुतप्रतिषेध' इति पाठः। इह स्थान्यकारो विवृतोऽण्त्वात्सवर्णानां ग्राहक इति दीर्घप्लुतयोरपि स्थाने संवृतोऽकारः प्राप्नोतीति प्रतिषेध उच्यते । आदेशस्येति । संवृताऽकारोऽण्न भवतीति सवर्णानां ग्रहणं न प्राप्नोति । भाव्यमानत्वाच्च । उदात्तेति । ततश्च यद्गुणयुक्तः संवृत उच्चारितस्तद्गुण एव त्रयाणामपि ह्रस्वदीर्घप्लुतानां प्राप्नोतीत्यनिष्टप्रसङ्गः, इष्टं च न सिध्यतीति, सर्वगुणस्य मात्रिकस्य प्रत्यापत्तेरिष्टत्वात् । सिद्धं त्विति । 'अद्' इति सूत्रं कर्तव्यम् । तत्र तः परो यस्मादिति पूर्वोऽकारस्तपरः । तात्परस्तपर इत्येवं द्वितीयस्तपरः । एवन्त्विति । यतस्त-

---

उ.] थस्य वक्तव्यतामुपपादयति–इह स्थान्यकार इति । 'अ अ' इति सूत्रे इत्यर्थः। वार्तिके हेतुकथनमुपलक्षणमित्याह–भाव्यमानत्वाच्चेति । इष्टं चेति । उदात्तादिगुणयुक्तह्रस्वस्थाने तद्गुणकस्यैव प्रत्यापत्तिरिष्टा, सा च सवर्णग्रहणाऽभावे न सिध्यतीत्यर्थः । अत्र सिद्धन्त्विति प्रथमवार्तिके 'अत् अ' इति, उत्तरत्र तपरत्वरहितः पाठः । 'अपर आहे'ति पक्षे उभयत्रापि तपरनिर्देश इति भेदः । तद्व्याचष्टे–अद् इति सूत्रमिति । तः पर इति । तपरसूत्रे तन्त्रेणार्थद्वयाश्रयणादिति भावः । भिन्नकालाविति । नियमफलकविध्यर्थं च तत्सूत्रं । तद्ध्वनयन्नाह–आदेशस्तु तत्कालानिति । 'अपर आहे'त्येतद्व्याचष्टे–केचिदिति । षण्मात्रिका इति । एकश्रुतिविषयेण सहोदात्तानु-

शात् ॥ * ॥ **सिद्धमेतत् ॥ कथम् ? ॥ तपरनिर्देशात्' । तपरनिर्देशः कर्तव्यः । 'अद्'दिति** ॥ * ॥ एकशेषनिर्देशाद्वा स्वरानुनासिक्यभिन्नानां भगवतः पाणिनेः सिद्धम् ॥*॥ **एकशेषनिर्देशाद्वा स्वरभिन्नानां भगवतः पाणिनेराचार्यस्य सिद्धम् । 'एकशेषनिर्देशोऽयम्'–अ अँ अ इति ॥**

**इति श्रीमद्भगवत्पतञ्जलि[मुनि]विरचिते व्याकरणमहाभाष्येऽष्टमस्याऽध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ चतुर्थः पादोऽष्टमोऽध्यायश्च समाप्तः ।**

---

**प्र.**]परस्ततः स्थान्यकारो भिन्नकालौ दीर्घप्लुतौ न ग्रहीष्यति । आदेशस्तु तत्कालान्गुणान्तरयुक्तान्ग्रहीष्यति । केचिददिति द्वावपि तपरौ पठितव्याविलाहुः । **एकशेषनिर्देशाद्वेति** । षण्मात्रिका अकाराः स्थानिनो निर्दिश्यन्ते । एवमादेशा अपि षडेव । ततश्चैकशेषः, तत्र षण्णां स्थानिनां निर्देशसामर्थ्याद्भिन्नकालौ दीर्घप्लुतौ स्थानिभिर्न गृह्येते । तत्र यथासङ्ख्यं षण्णां विवृतानां स्थाने षडादेशाः संवृता भवन्तीति सिद्धमिष्टम् ॥

श्रुत्वा शास्त्राणि विद्वद्भ्योयथाप्रज्ञं यथाऽऽगमम् । भाष्यदीपं व्यधत्तेमं कैय्यटो जैय्यटात्मजः॥१॥

**इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपेऽष्टमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ पादोऽध्यायश्च समाप्तः ।**

---

**उ.**]दात्तस्वरितानुनासिकाऽननुनासिकाः षडित्यर्थः । यद्वा उदात्तादित्रयमनुनासिकत्वतदभावाभ्यां द्विधेति षट् । **सामर्थ्यादिति** । अन्यथैकशेषाश्रयणमनर्थकं स्यादिति भावः । **स्थानिभिरिति** । आदेशैस्त्वनण्त्वादेव न गृह्येतेति भावः । **सिद्धमिष्टमिति** । अनेन व्याकरणाध्ययनप्रयोजनाभ्यां सकलपुरुषार्थसिद्धिं दर्शयति । अन्ते मङ्गलाचरणं च कृतं भवति । एवं सूत्रकारेणाऽपि विष्णुवाचकाऽकारस्य द्विरुच्चारणाद्द्विर्विष्णुस्मरणरूपं मङ्गलमाचरितम् । किं च'ऽकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना नानारूपा भवती'ति श्रुतेरकारस्य सर्वशब्दप्रकृतित्वात्, 'अ'इति ब्रह्मे'ति शब्दब्रह्मरूपत्वश्रवणाच्च महामङ्गलार्थता । वार्तिककृताऽपि 'भगवतः पाणिनेः सिद्ध'मिति सिद्धशब्दोच्चारणेन कृतं मङ्गलं । भगवता पतञ्जलिनाऽपि 'एकशेषनिर्देशोऽयम अ' इत्यन्ते वदता कृतं मङ्गलम् । एवञ्च तदध्यायिनां प्रवक्तृणां च सकलपुमर्थसिद्धिर्दर्शिता । यथोक्तम्—**'इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् । इयं सा मोक्षमाणानामजिह्मा राजपद्धति**रिरितिसर्वेष्टसिद्धिः॥

भाष्याब्धेः सप्रदीपस्य भगवत्कृपया मया । यथामति कृता व्याख्या प्रीयतां भगवांस्तया॥१॥
गङ्गा शिवश्च शेषश्च रक्षन्त्वेनां तु सर्वशः । सतां हृदयपद्मेषु प्रसिद्धिं प्रापयन्तु च ॥ २ ॥

**इति श्री शिवभट्टसुतसतीगर्भजकालोपनामकनागोजीभट्टकृतेमहाभाष्यप्रदीपोद्योतेऽष्टमाध्यायस्य चतुर्थे** पादे **प्रथम**माह्निकम् ॥ पादोऽध्यायश्च समाप्तः ।